शिवः शिवं सर्वं नास्ति भेदश्च कश्चन ॥ कथं च विविधं पश्यत्येकत्वं च कथंपुनः ॥ २० ॥ यथैकं चैव सूर्याख्यं ज्योतिर्नानाविधं जनैः ॥ जलादौ च विशेषेण दृश्यते तत्तथैव सः ॥ २१ ॥ सर्वत्र व्यापकश्चैव स्पर्शत्वं न विबध्यते ॥ तथैव व्यापको देवो बध्यते न क्वचित्स वै ॥ २२ ॥ साहंकारस्तथा जीवस्तन्मुक्तः शंकरः स्वयम् ॥ जीवस्तुच्छः कर्मभोगी निर्लिप्तः शंकरो महान् ॥ २३ ॥ यथैकं च सुवर्णादि मिलितं रजतादिना ॥ अल्पमूल्यं प्रजायेत तथा जीवोऽप्यहंयुतः ॥ २४ ॥ यथैव हि सुवर्णादि क्षारादेः शोधितं शुभम्॥पूर्ववन्मूल्यतां याति तथा जीवोऽपि संस्कृतः ॥२५॥ प्रथमं सद्गुरुं प्राप्य भक्तिभावसमन्वितः ॥ शिवबुद्ध्या करोत्युच्चैः पूजनं स्मरणादिकम् ॥ २६ ॥ तद्बुध्या देहतो याति सर्वपापादिको मलः ॥ तदाऽज्ञानं च नश्येत ज्ञानवाञ्जायते यदा ॥ २७ ॥ तदाहंकारनिर्मुक्तो जीवो निर्मलबुद्धिमान् ॥ शङ्करस्य प्रसादेन याति शङ्करताम्पुनः ॥२८॥ यथाऽऽदर्शस्वरूपे च स्वीयरूपं प्रदृश्यते ॥ तथा सर्वत्रगं शम्भु पश्यतीति सुनिश्चितम् ॥२९॥ जीवन्मुक्तस्स एवासौ देहः शीर्णः शिवे मिलेत् ॥ प्रारब्धवशगो देहस्तद्भिन्नो ज्ञानवान् मतः ॥ ३० ॥ शुभं लब्ध्वा न हृष्येत कुप्येल्लब्ध्वाऽशुभं न हि ॥ द्वंद्वेषु समता यस्य ज्ञानवानुच्यते हि सः ॥ ३१ ॥ आत्मयोगेन तत्त्वानामथवा च विवेकतः ॥ यथा शरीरतो यायाच्छरीरं मुक्तिमिच्छतः ॥ ३२ ॥ सदाशिवो विलीयेत मुक्तो विरहमेव च ॥ ज्ञानमूलन्तथाध्यात्म्यं तस्य भक्तिश्शिवस्य च ॥ ३३ ॥ भक्तेश्च प्रेम संप्रोक्तं प्रेम्णश्च श्रवणन्तथा ॥ श्रवणाच्चापि सत्संगस्सत्संगाच्च गुरुर्बुधः ॥३४॥ सम्पन्ने च तथा ज्ञाने मुक्तो भवति निश्चितम् ॥ इति चेज्ज्ञानवान्यो वै शंभुमेव सदा भजेत् ॥३५॥ अनन्यया च भक्त्या वैयुक्तः शम्भुं भजेत्पुनः ॥ अन्ते च मुक्तिमायाति नात्र कार्या विचारणा ॥३६॥ अतोऽधिको न देवोऽस्ति मुक्तिप्राप्त्यै च शंकरात् ॥ शरणं प्राप्य यश्चैव संसाराद्विनिवर्तते

॥ ३७ ॥ इति मे विविधं वाक्यमृषीणां च समागतैः ॥ निश्चित्य कथितं विप्रा धिया धार्यं प्रयत्नतः ॥ ३८ ॥ प्रथमं विष्णवे दत्तं शंभुना लिंगसम्मुखे ॥ विष्णुना ब्रह्मणे दत्तं ब्रह्मणा सनकादिषु ॥ ३९ ॥ नारदाय ततः प्रोक्तं तज्ज्ञानं सनकादिभिः ॥ व्यासाय नारदेनोक्तं तेन मह्यं कृपालुना ॥ ४० ॥ मया चैव भवद्भ्यश्च भवद्भिर्लोकहेतवे ॥ स्थापनीयं प्रयत्नेन शिवप्राप्तिकरं च तत् ॥ ४१ ॥ इतिवश्च समाख्यातं यत्पृष्टोऽहं मुनीश्वराः ॥ गोपनीयं प्रयत्नेन किमन्यच्छ्रोतुमिच्छथ ॥ ४२ ॥ व्यास उवाच ॥ एतच्छ्रुत्वा तु ऋषय आनन्दं परमं गताः ॥ हर्षगद्गदया वाचा नत्वा ते तुष्टुवुर्मुदा ॥ ४३ ॥ ऋषय ऊचुः ॥ व्यास शिष्य नमस्तेऽस्तु धन्यस्त्वं शैवसत्तमः ॥ श्रावितं नः परं वस्तु शैवं ज्ञानमनुत्तमम् ॥४४॥ अस्माकं चेतसो भ्रान्तिर्गता हि कृपया तव ॥ सन्तुष्टाः शिवसज्ज्ञानं प्राप्य त्वत्तो विमुक्तिदम् ॥४५॥ सूत उवाच ॥ नास्तिकाय न वक्तव्यमश्रद्धाय शठाय च ॥ अभक्ताय महेशस्य न चाशुश्रूषवे द्विजाः॥४६॥इतिहासपुराणानि वेदाञ्छास्त्राणि चासकृत् ॥ विचार्योद्धृत्य तत्सारं मह्यं व्यासेन भाषितम् ॥ ४७ ॥ एतच्छ्रुत्वा ह्येकवारं भवेत्पापं हि भस्मसात् ॥ अभक्तो भक्तिमाप्नोति भक्तस्य भक्तिवर्द्धनम्॥४८॥पुनश्च श्रुते च सद्भक्तिर्मुक्तिस्स्याच्च श्रुते पुनः॥तस्मात्पुनः पुनश्चाव्यं भुक्तिमुक्तिफलेप्सुभिः॥४९॥आवृत्तयः पंच कार्याः समुद्दिश्य फलं परम् ॥ तत्प्राप्नोति न सन्देहो व्यासस्य वचनं त्विदम्॥५०॥न दुर्लभं हि तस्यैव येनेदं श्रुतमुत्तमम् ॥ पंचकृत्वस्तदावृत्त्या लभ्यते शिवदर्शनम्॥५१॥ पुरातनाश्च राजानो विप्रा वैश्याश्च सत्तमाः ॥ इदं श्रुत्वा पंचकृत्वो धिया सिद्धिं परां गताः ॥ ५२ ॥ श्रोष्यत्यद्यापि यश्चेदं मानवो भक्तितत्परः ॥ विज्ञानं शिवसंज्ञं वै भुक्तिं मुक्तिं लभेच्च सः ॥ ५३ ॥ ॥ व्यास उवाच ॥ इति तद्वचनं श्रुत्वा परमानन्दमागताः ॥ समानर्चुश्च ते सूतं नानावस्तुभिरादरात् ॥५४॥ नमस्कारैः स्तवैश्चैव स्वस्तिवाचनपूर्वकम् ॥ आशीर्भिर्वर्द्धयामासुः संतुष्टाश्छिन्नसंशयाः ॥ ५५ ॥ परस्परं च संतुष्टाः सूतस्ते च सुबुद्धयः ॥ शंभुं देवं परं मत्वा नमंति स्म भजंति च ॥ ५६ ॥ एतच्छिवसुविज्ञानं

शिवस्यातिप्रियं महत् ॥ भुक्तिमुक्तिप्रदं दिव्यं शिवभक्तिविवर्द्धनम् ॥९७॥ इयं हि संहिता पुण्या कोटिरुद्राह्वया परा ॥ चतुर्थी शिवपुराणस्य कथिता मे मुदावहा ॥९८॥ एतां यः शृणुयाद्भक्त्या श्रावयेद्वा समाहितः ॥ स भुक्त्वेहाखिलान्भोगानंते परगतिं लभेत् ॥ ॥ ९९ ॥ इति श्रीशिवमहापुराणे चतुर्विंशतिसाहस्र्यां वैयासिक्यां संहितायां तदन्तर्गतायां चतुर्थ्यां कोटिरुद्रसंहितायां ज्ञाननिरूपणं नाम त्रिचत्वारिंशोऽध्यायः ॥ ४३ ॥ ॥ समाप्तेयं शिवमहापुराणान्तर्गतकोटिरुद्रसंहिता चतुर्थी ॥ ॥ ॥ ॥

